॥ श्री हयग्रीवप्रार्थनादशकस्तोत्रम् ॥

रमारमण मध्वादिदेशिकश्रीहृदब्जग ।
हयग्रीव कृपालो मे प्रार्थनां शृणु सादरम् ॥ १ ॥

अयोग्यविषये स्वामिन् सर्वथा न मनो भवेत् ।
चांचल्यं मूलतश्छिन्धि दुराशं हर दूरतः ॥ २ ॥

दुर्बुद्धिं च न मे देहि दुःशास्त्रावर्तने रतिम् ।
हापयस्व च दुर्मानं दुर्गुणं मोचय प्रभो ॥ ३ ॥

दुःसङ्गं दुष्क्रियां छिन्धि हर लोकाटनात् पदो ।
न नियोजय चक्षूंषि परदारादिदर्शने ॥ ४ ॥

दुष्प्रतिग्रहदुस्पर्शे करो मा चोदय ध्रुवम् ।
अगम्यागमने गुह्यं ग्राणमाघ्राणनेऽसताम् ॥ ५ ॥

अपकर्षतु जिह्वां मे लोकवार्तादुरन्नतः ।
दुर्वार्तादुष्टशब्देभ्यो निवर्तय हरे श्रुती ॥ ६ ॥

भवदिच्छानुगं चेतो योग्यसद्विषयं भवेत्।
यदृच्छालाभसंतृप्तं निश्चान्चल्यं भवेत् त्वयि ॥ ७ ॥

सुज्ञानं सर्वदा देहि सच्छास्त्रावर्तने रतिम्।
सत्संगं सत्क्रियां चैव पादो त्वत्क्षेत्रसर्पणे ॥ ८ ॥

श्रीमध्वशास्त्रश्रवणे नियुंक्ष्व श्रवणे सदा।
हयास्य चक्षूंषि च मे दर्शने सन्नियोजय ॥ ९ ॥

करो त्वदर्चने नित्यं सुखतीर्थस्य लेखने।
त्वदालापे त्वदुच्छिष्ठभोजने कुरु जिह्विकाम्॥ १० ॥

घ्राणं भवतु निर्माल्याघ्राणने नमने शिरः।
देहि मे तु ज्ञानभक्तिपशुपुत्रधनादिकम्॥ ११ ॥

प्रार्थनादशकं चैतत् त्रिकाले यः पठेन्नरः।
तस्याभीष्टं हयास्योऽसो दत्वा रक्षति सर्वदा ॥ १२ ॥
॥ इति श्रीवादिराजतीर्थश्रीचरणकृतं श्रीहयग्रीवप्रार्थनादशकस्तोत्रम्॥